# MAHĀBHĀRATAM

*with*

***the Commentary***

*of*

## NĪLAKAṆṬHA.

## 1 Ādiparva.

*Illustrated.*

PRINTED AND PUBLISHED

BY

*Shankar Narhar Joshi*, at Chitrashala Press, Poona City.

**POONA.**

**1929.**

॥ श्रीः ॥

# महाभारतम्।

( नीलकण्ठकृतया भारतभावदीपाख्यया टीकया समेतम्। )

## १ आदिपर्व।

अयं ग्रन्थः पुण्यपत्तने १०२६ सदाशिववीथ्यां चित्रशालाख्ये मुद्रणालये
शंकर नरहर जोशी इत्याख्यैरधिकारिभिर्मुद्रयित्वा प्रकाशितः।

शाकः १८५०.

# प्रस्तावः ।

इह खलु निखिलेऽपि भरतखण्डे न तादृशः कोऽपि ग्रन्थो यः किल महाभारततुलामधिरोक्ष्यति । तत्र नानाविधाः खलु विषयास्तत्तत्स्थलेषु विशदीकृता भगवता व्यासमहर्षिणा । सर्वेष्वपि पुराणग्रन्थेषु प्रामुख्येन वरीवर्तेतेऽसौ । ऐतिहासिकग्रन्थेष्वपि प्रमाणत्वेन स्वीक्रियते सूरिभिरयं ग्रन्थः । 'भारतं पञ्चमो वेदः' 'व्यासोच्छिष्टं जगत्सर्वम्' इत्यादीनि सूक्तान्यपि महत्त्वमेतस्य प्रकटीकुर्वन्ति नित्यशः । बालवृद्धानां सर्वेषामपि स्त्रीपुरुषाणामुपकारकोऽयं ग्रन्थराजः इति नास्त्यत्र संशयावसरः । अनेकाः कथा उपकथा आख्यानान्याख्यायिकाश्चात्र सर्वत्र दरीदृश्यन्ते । तेन च विदुषामिव सामान्यानामपि जनानां मार्गदर्शकोऽयं ग्रन्थ इति विदितमेव सर्वेषाम् । एतद्गतान्याख्यानानि पुरस्कृत्य बहुभिः कविभिः प्रबन्धकाद्भिश्च नानाविधाः समलंकृता देशभाषा इत्यपि लोकप्रियत्वं प्रदर्शयन्त्यस्य प्रयत्नसमवायाः। न केवलं भारतं वर्षं किं तु निखिलमपि जगत्प्रभया ग्रन्थस्यास्य प्रकाशितामित्यहो महाभाग्यं भारतवर्षीयाणाम् । श्रीमद्भगवद्गीतासदृशानि निखिलजगल्ललामभूतानि देदीप्यमानानि नानाविधानि रत्नान्यपि प्रादुरभूवन्नेतस्मादेव ग्रन्थमहोदधेरिति विदितमेव महाशयानाम् । महासमुद्राच्चतुर्दशैव रत्नानि समुद्धृतानि गीर्वाणैरिति श्रूयते किं तु भारतवर्षीयैर्महाग्रन्थसागरादस्मान्नानाविधानि दिव्यानि चिरस्थायीनि रत्नानि समुद्धृतानीति महान्खलु लाभोऽयमभूतपूर्वः ।

अतिविस्तृतोप्ययं ग्रन्थः सर्वैरपि जगद्विश्रुतैर्विद्वद्भिः संपूज्यतेऽनुवाच्यते संगृह्यते स्वस्वभाषासु छायया चालंक्रियते इति महत्येतस्य लोकमान्यता । कैश्चित्तु सादरमारभ्यते पाठसंशोधनकार्यमप्येतस्य । वैदेशिकैश्च ग्रन्थमेतं पुरस्कृत्यानेकविधाः प्रबन्धाः प्रकाशितास्ते च सर्वैरनुमताः । संप्रति ग्रन्थस्यास्य दौर्लभ्यं विचिन्तयद्भिः कैश्चिद्विद्वद्भिः प्रकाशनविषये साग्रहमनुज्ञाता वयं प्रयतिष्यामहे तथाविधेऽतिमहत्यपि कर्मणि वाचकमहाशयानामनुग्रहेण । महाराष्ट्रेषु 'गणपत कृष्णाजी' इत्येतैः, 'गोपाल नारायण' इत्येतैश्च मुद्रितं 'निर्णयसागरमुद्रणालये मुद्रयित्वा कुम्भकोणनगरे प्राकाश्यं नीतं'चेति पुस्तकत्रितयं प्रागेवासीत् । संप्रति तु तस्याप्यतिदुर्लभत्वात्पुनः संस्करणमावश्यकमित्याकलय्यादिसभापर्वणोः प्रथमखण्डमिदं प्रसिद्धीक्रियतेऽस्माभिः । अत्र च नीलकण्ठकृता भारतभावदीपाख्या टीका संनिवेशिता । त्रिचतुरासु टीकास्वियमेव विशेषतो महाराष्ट्रेष्वाद्रियते सुधीभिः । संपूर्णा चेयमुपलभ्यते न खण्डिता । एवं खलु धाष्टर्यमिदमाचरन्तो वयं सर्वथाऽनुग्राह्याः सहृदयैर्वाचकमहाशयैरिति सादरमभ्यर्थ्य विरमामः इति शिवम् ।

श्रीमहाशिवरात्रिः
शाक १८५०

चित्रशालामुद्रणालयाधिपतिः ।

श्रीः

# आदिपर्व।

# १

## अनुक्रमणिका।

आदिपर्वसमाप्तिः ।

आदिपर्व १ अवान्तरपर्वाणि १९ अध्यायाः २३४ श्लोकाः ८३७३.

॥ श्रीः ॥

# महाभारतम् ।

## ( सटीकम् )

# आदिपर्व

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥**

श्रीगणेशाय नमः ॥ श्रीवेदव्यासाय नमः ॥ श्रीगुरुभ्यो नमः ॥ यं वक्त्रं मुकुरा इवेन्द्रियमनोमायाः पराग्दृश्यताम् । निन्युस्तत्स्थविमादिनापि च विराट्सूत्रेशभावंगतम् ॥ तं प्रत्यग्दृग्दृश्यमक्षरमणुं त्यक्तोपनेत्रत्रयाः । श्रीगोपालमुपास्महे श्रुतिशिरोवंशीरवैर्दर्शितम् ॥ १ ॥ बाह्यः स्तेनाभिभाषी बहिरुदवसितं पाति तर्कः प्रतिष्ठो । मीमांसा प्रातिहार्यं भजति गुणगणं यस्य संख्यातिसांख्यः ॥ हृत्पीठे योगशुद्धे निहितमुपनिषद्वाहवृन्दैः परं मे । भाग्यं श्रीलक्ष्मणार्यो जगति विजयते यस्य लेशः शिवायाः ॥ २ ॥ हरिविधिवसिष्ठशक्तिपराशराख्यासशुकदेवान् ॥ वैशंपायनमुग्रश्रवसं च नुमः पुराणगुरुमुख्यान् ॥३॥ कणभक्षमक्षचरणं जैमिनिकपिलौ पतंजलिं च नुमः । श्रीमद्व्यासवचोंबुधि नय सीकरवर्षिणोमुदिरान् ॥ ४ ॥ सर्वविशेषतामाविश्चिकीर्षू पूर्वपूरुषौ । श्रीनारायणधीरेशरूपौ हरिहरौ नुमः ॥ ५ ॥ बहून्समाहृत्य विभिन्नदेश्यान्कोशान्विनिश्चित्य च पाठमग्र्यम् । प्राचां गुरूणामनुसृत्य वाचमारभ्यते भारतभावदीपः ॥ ६ ॥ टीकान्तराणीन्दुरविप्रभाणि बाह्यार्थरत्नानि चकासयन्तु ॥ अन्तर्निगूढार्थचयप्रकाशे दीपःक्षमो भारतमन्दिरेऽस्मिन् ॥ ७ ॥ ईशप्रसादादवितुं स्ववंश्यान्भगीरथेनेव मया प्रणीता ॥ एषा महाभारततीर्थगंगा लोकत्रयीजाड्यमलं धुनोतु ॥ ८ ॥ उतानेष्विह कोशाविग्रहबलं पद्येषु नैवाश्रितम् । गंभीरेषु न सैतवो न विहिताः कूटाननस्फोटिताः ॥ न च्छिन्नानतमश्वराननततिर्भक्तानना ल्हादिता नोदीना न विभीषणाश्च विहिताः श्रीलक्ष्मणार्याश्रितैः ॥ ९ ॥

१. गृहम् । २. मेघान् ।

इह खलु भगवान्पाराशर्यः परमकारुणिको मन्दमध्यममतीननुग्रहीतुं चतुर्दश विद्यास्थानरहस्यान्येकत्र प्रदिदर्शयिषुर्महाभारताख्यमितिहासं प्रणेष्यन्प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनाय च कृतं मङ्गलं शिष्यशिक्षायै श्लोकरूपेण निबध्नन्नर्थात्तत्र प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयादि दर्शयति । **नारायणमिति** । नरोऽविद्यावच्छिन्नं चैतन्यं जीवः तेन विषयीकृतेऽनवच्छिन्नचैतन्यरूपे ब्रह्मणि शुक्तौ रजतवत्कल्पितं चराचरं अप्शब्दवाच्यं नारं तदेव अयनं शुक्तीदमंशस्य रजतमिव प्रवेशस्थानं यस्य स नारायणः । स्वस्मिन् जीवकल्पितस्य प्रपञ्चस्य सत्तास्फूर्तिप्रदत्वेन कारणीभूत इत्यर्थः । यथोक्तम्–'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति तं नारायणं नमस्कृत्य तथा नरं उक्तरूपं नमस्कृत्य एनं विशिनष्टि नरोत्तममिति जीवो हि चेतनत्वेन जडवर्गादुत्कृष्टस्तत उत्कृष्टतरः कारणात्मा नारायणस्ततोऽप्युत्कृष्टतमं निरुपाधिचैतन्यं सत्यं ज्ञानमनन्तं ब्रह्मविज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिषु प्रसिद्धं तदेव नरोत्तमस्य निरस्ताविद्यस्य जीवस्य निष्प्रपञ्चं पारमार्थिकं रूपमिति युक्तं तत्रोत्तमत्वविशेषणं यथोक्तं 'पिण्डब्रह्माण्डनेतृत्वान्नरौ जीवेश्वरावुभौ । तयोश्च नयनाच्छुद्धं ब्रह्मापि नर उच्यते ॥ न रजानामपां कार्यं नारं ब्रह्माण्डमिष्यते । तत्रास्य वसतिस्थानं तेन नारायणो विभुः॥ स्वाविद्यासृष्टपिण्डेन तादात्म्यं यो गतो नरः । स जीवः स परं ब्रह्म नरोत्तमपदाभिधम्॥ तद्द्योतिकां गिरं नत्वा ततो व्यासस्तयैव सन् । संसारजयिनं ग्रन्थं जयनामानमीरयेत् ॥' इति एवं च जीवाविद्याकल्पितत्वात् जगतो मिथ्यात्वं ब्रह्मणश्च तत्र

सतास्फूर्तिप्रदत्वेन सत्यत्वं जीवस्य तदभिन्नत्वं चेति विषयो दर्शितः । अविद्या निवृत्तौ तत्कृतस्य प्रपञ्चस्य त्रैकालिकबाधादात्यन्तिक्यनर्थनिवृत्तिः प्रयोजनम् । अर्थात्तत्कामोऽधिकारी ग्रन्थस्य उक्तविषयस्य च ज्ञाप्यज्ञापकभावः संबन्ध इति च दर्शितम् । देवीं नरनारायणनरोत्तमतत्त्वप्रद्योतनीं सरस्वतीं च नमस्कृत्यैव ततो व्यासस्तयैव सरस्वत्या परमकारुणिकया जनबोधायाविष्टो जयं जयो नामेतिहासोऽयमिति वक्ष्यमाणत्वाज्जयसंज्ञं भारताख्यमितिहासं वा 'अष्टादशपुराणानि रामस्य चरितं तथा । कार्ष्णं वेदं पञ्चमं च यन्महाभारतं विदुः ॥ तथैव विष्णुधर्माश्च शिवधर्माश्च शाश्वताः । जयेति नाम तेषां च प्रवदन्ति मनीषिणः ॥' इति भविष्यवचनात् पुराणादिकं वा चतुर्णां पुरुषार्थानामपि हेतौ जयो स्त्रियामिति कोशादन्यं वा सर्वपुरुषार्थप्रतिपादकं ग्रन्थं शारीरकसूत्रभाष्यादिरूपं उदीरयेत् उच्चारयेत् । अत्र लिङा मंगलाचरणस्य ग्रन्थपाठेऽप्यावश्यकत्वं दर्शयता रचनारंभे सुतरां तद्दर्शितं नन्वेतन्न पठनीयं न व्याख्येयं च पौरुषेयत्वात्पुरुषेषु च भ्रमविप्रलंभकत्वयोः संभवादिति चेन्न । सर्वज्ञेषु वेदैकप्रमाणेषु मन्वादिषु तदसंभवात् । पूर्वतन्त्रे च स्मृत्यादिधर्मे प्रामाण्यस्य सिद्धत्वात् । यस्यां तु स्मृतौ लोभमूलकत्वं प्रत्यक्षं दृश्यते यथा वै सर्जनहोमीयं वासोऽध्वर्युः परिगृह्णातीति तत्रास्त्वप्रामाण्यं नत्वष्टकाः कर्तव्या प्रपाः कर्तव्या ऊर्ध्वपुण्ड्रं मृदा कुर्यादित्यादीनां तासां लोभमूलकत्वादर्शनात् । यां जनाः प्रतिनन्दन्ति धन्वन्निव प्रपा असि त्वमग्ने श्रोणामेक उदकं गामवाजतीति मन्त्रलिङ्गानुमितविधिमूलकत्वाच्च धन्वधन्वानि निरुदकप्रदेशे किमुश्रेष्ठः षळूना आर्भवं त्रिष्टुबंतमित्यनुक्रमणिकायां किमुश्रेष्ठ इति सूक्तस्य चतुर्दशर्चस्य ऋभुदैवत्यस्य नवम दशम्यावेते ऋचौ आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् । वर्धयन्तीं बहुभ्यः प्रैको अब्रवीदृता वदन्तश्चमसाँ अपिंशत ९ श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतं आनिम्रुचः शकृदेको अपाभरत्किंस्वित्पुत्रेभ्यः पितरावुपावतुः २ अत्र ऋभ्वाख्य देवतास्तुतिव्याजेन श्रेयःसाधनानि विधीयन्ते । हे ऋभवः । भवतां मध्ये एकः कश्चित्तीर्थाश्रयेणैव प्राप्तदेवताभाव आप एव भूयिष्ठा उत्कृष्टतमा इत्यब्रवीत् । एवं यज्ञादिना प्राप्तदेवताभावोऽन्योऽग्निर्भूयिष्ठ इत्यब्रवीत् । वर्धयन्तीं अवपूर्वाद्भ्रुवो विच् प्रत्ययेभागुरिमतेनाकारलोपे चेदं रूपं स्वरादि पाठादव्ययत्वं निपातत्वादाद्युदात्तत्वं च वधरित्यव्ययं पालनार्थे अवगत्य धारयतीति योगात् । तदर्थं यन्तीं गच्छन्तीं चेतोवृत्तिं दयां बहुभ्यः प्रमाणेभ्यो निश्चित्य एकः दययैव प्राप्तदेवताभावः प्रकर्षेण अब्रवीत् । ते यूयं ऋता ऋतानि सत्यान्ये वै तान्यवादीनि देवताभावप्राप्तिसाधनानि वदन्त उपदिशन्तो यज्ञेषु चमसान् सोमयुक्तान् अपिंशत व्यभजन्त । अत्र त्वेवमुपाख्यायते । ऋभवो नाम त्रयो देवा एकं चमसमासेदुस्तत्र वह्निरपि तद्रूपं गृहीत्वा आगतस्ते तमतिसारूप्यात् पृथग्ज्ञातुमशक्ता एकं चमसं चतुर्धा व्यभजन्तेति । यद्वा सत्यवादिनामेव तीर्थादिफलदमिति ऋता वदन्त इत्यस्यार्थः । श्रोणामेकः हे ऋभवः भवतां मध्ये एकः श्रोणां श्लक्ष्णां गां मृदं गोपीचन्दनादिरूपां तीर्थनिकटस्थां मुख्यकर्मभूतां प्रति उदकं जलं गौणं कर्म अवाजति अवगमयति अन्तर्भावितण्यर्थोऽयं श्रोणां गां उदकेन मिश्रयतीत्यर्थः । श्रोणां गां रक्तचन्दनानिरूपां वा तथा एकः सूनया हिंसया तत्कर्त्रा आभृत आहृतं मांसं गोरोचनाख्यं पिंशति पिनष्टि उदकेन सहेति शेषः । निम्रुचः नितरामस्तं गच्छतो दग्धेन्धनस्याग्नेः संबन्धिशकृत् गोमयं शुष्कगोमयोत्थं भस्मेति यावत् । अपाभरत् अपाहृतवान् । अत्राप्युदकेन सहेति शेषः । व्यवहिताश्चेतिच्छंदसि व्यवहितेनाप्युपसर्गेण क्रियायाः संबन्धः । हृग्रहोर्भश्छन्दसीतिहस्यभः एतानि मन्त्रपदानि असंपूर्णार्थत्वात् । स्वार्थलाभाय ब्राह्मणमपेक्षन्ते इषे त्वोर्जेत्वेत्यादि मन्त्रवत् तत्र यथा । इषे त्वेति शाखामाच्छिनति । ऊर्जेत्वेत्यनुमार्ष्टीति ब्राह्मणानुसारात् । हे शाखे त्वा त्वां इषे अन्नाय च्छिनद्मीति ऊर्जे पशुभ्यः अनुमार्ज्मीति व्याख्यातम् । एवमिहापि वासुदेवोपनिषद्ब्राह्मणतंत्रपुराणोपबृंहणानुसारात् ऊर्ध्वपुण्ड्रार्थं श्लक्ष्णां मृदं जलेन मिश्रयेदिति व्याख्येयम् । तथा कालाग्निरुद्रबृहज्जाबालाद्युपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् । त्रिपुण्ड्रं कर्तुं निम्रुचः शकृदपाभरादिति च व्याख्येयम् । एवमितरस्यापि पादस्य ब्राह्मणमन्त्रलिङ्गादुपबृंहणस्मृतिभ्यश्चाष्टकाप्रपाविधिवदनुमेयम् । तथा च श्रोणामिति पदस्य रक्तामिति व्याख्याने सौरशाक्तगाणेशानां रक्तमेव पार्थिवं द्रव्यं पुण्यार्थे तत्तत्तन्त्रे विधीयते । वैष्णवानां पीतं शैवानां भस्मेति अनेन तत्तत्पुण्ड्रविशेषोपलक्षिततत्तद्देवताभजनेनापि देवताभावं प्राप्नुवन्तीति विधियते । केवलं वैदिकानां तु श्रोणां श्लक्ष्णामिति व्याख्यानेन त्रितयस्यापि समुच्चयः स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना देवान् विप्रान् समभ्यर्च्य चन्दनेन समाचरेदिति स्मृतिभ्यः अत्र गोरोचनाग्रहणं चन्दनाद्यष्टगन्धोपलक्षणार्थं एतेषां विकल्पसमुच्चयपक्षाणां पितृपैतामहपरंपराक्रमेण व्यवस्थामाह । किंस्वित्पुत्रेभ्यः पितरावुपावतुरिति पुत्रहितार्थं यत्किंचिद्व्रतं पितरौ मातापितरौ पितृपितामहौ वा उपेत्य स्वीकृत्य अवतुः व्रतं सम्यक्परिपालयामासतुः तदेवं तस्य पुत्रस्य श्रेयः साधनमित्यर्थः । एवं सत्यवादिनां तीर्थानि यज्ञादयस्तन्त्रमार्गेण सूर्याद्यन्यतमोपास्तिः केवलवैदिकता चेति देवताभावप्राप्तिसाधनानीति मन्त्रद्वयतात्पर्यं सिद्धम् । तस्मादस्मदादिभिरल्पज्ञैर्दृष्टमूलमदृष्टमूलं वा मनुव्यासादिसर्वज्ञप्रणीतं स्मृतिजातं वेदवद्वेदविदां वचनमिति न्यायेनागमयितव्यं पठनीयं व्याख्येयं चेति सर्वमनवद्यम् ॥१॥

**ॐ नमो भगवते वासुदेवाय। ॐ नमः पितामहाय। ॐ नमः प्रजापतिभ्यः। ॐ नमः कृष्णद्वैपायनाय।**

**ॐ नमः सर्वविघ्नविनायकेभ्यः ।**

**लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे॥१॥**

सुखासीनानभ्यगच्छद्ब्रह्मर्षीन्संशितव्रतान् ।
विनयावनतो भूत्वा कदाचित्सूतनन्दनः ॥ २

तमाश्रममनुप्राप्तं नैमिषारण्यवासिनाम् ।
चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः ॥ ३

अभिवाद्य मुनींस्तांस्तु सर्वानेव कृताञ्जलिः ।
अपृच्छत्स तपोवृद्धिं सद्भिश्चैवाभिपूजितः ॥ ४

अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु ।
निर्दिष्टमासनं भेजे विनयाल्लौमहर्षणिः ॥ ५

सुखासीनं ततस्तं तु विश्रान्तमुपलक्ष्य च ।
अथापृच्छदृषिस्तत्र कश्चित्प्रस्तावयन्कथाः ॥ ६

कुत आगम्यते सौते क्व चायं विहृतस्त्वया ।
कालः कमलपत्राक्ष शंसैतत्पृच्छतो मम ॥ ७

एवं पृष्टोऽब्रवीत्सम्यग्यथावल्लौमहर्षणिः ।
वाक्यं वचनसंपन्नस्तेषां च चरिताश्रयम् ॥ ८

तस्मिन्सदसि विस्तीर्णे मुनीनां भावितात्मनाम्

सौतिरुवाच ।

जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः ॥ ९

महतः शास्त्रस्यारंभे बहुविघ्नसंभावनयाख्योपास्यं वासुदेवं द्वादशाक्षरेण प्रणम्य 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥' इत्युक्तेरीश्वरवत् परात्परं गुरुं पितामहं परमगुरून् वसिष्ठमरीच्यादीन् प्रजापतींश्च प्रणम्य अहं मनुरभवं सूर्यश्चेत्यादिना वामदेव इव स्वकीयं ब्रह्मभावमयमात्मा ब्रह्मेति शास्त्रमनुसंदधानः प्रत्यगात्मानमेव नमस्करोति । ॐ नमः कृष्णद्वैपायनायेति। ततो विघ्नविनायकान्नमस्कृत्य सुखासीनानिति भारतारंभश्लोकेऽपेक्षितं पूरयति गद्येन । लोमहर्षणपुत्र इति । लोमानि हर्षयांचक्रे श्रोतॄणां यः स्वभाषितैः कर्मणा प्रथितस्तेन लोमहर्षणसंज्ञयेति कौर्मे निरुक्तार्थनाम्नः पुत्रः उग्रश्रवाः उग्रस्य नृसिंहतापनीयोपनिषत्प्रतिपाद्यस्य वस्तुनः श्रवः श्रवणं यस्य सः अधिगतोपनिषद्रहस्य इत्यर्थः । सौतिः सूतजातेरुत्पत्तिरुक्ता वायुपुराणे । 'वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः। सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम् ॥ ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय दैवेन ततः सूतो व्यजायत ॥ शिष्यहव्येन संपृक्तमभिभूतं गुरोर्हविः।अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम् ॥' इति ब्राह्मण्यां क्षत्रियात्सूत इति याज्ञवल्क्योक्तं विलोमजत्वं तस्य सूतस्यापत्यं सौतिः पौराणिकः पुराणे कृतश्रमः नैमिषारण्ये वाराहे 'एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा। उवाच निमिषेणेदं निहतं दानवं बलं ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम्' ॥ इति उक्तरूपे। नैमिशेति पाठे तु वायवीये 'एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते। यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः' ॥ इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम्॥ प्रणिपत्य महादेवं विससर्ज पितामहः। तेऽपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुं । प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत॥ तद्वनं तेन विख्यातं नैमिशं मुनिपूजितमिति॥ तन्निर्वचनं द्रष्टव्यं शौनकस्य शौनः सर्वविवेकदङ्गीति लीलावत्यां शौन एव शौनकस्तस्य कुलपतेः 'एको दशसहस्राणि योऽन्नदानादिना भरेत्। स वै कुलपतिरित्युक्तलक्षणस्य सत्रे ये यजमानास्त एव ऋत्विजो यस्मिन्बहुकर्तृके क्रतौ स सत्रसंज्ञः यथोक्तम् । 'बहुभ्यो दीयते यत्र तृप्यन्ति प्राणिनो बहु । कर्तारो बहवो यत्र तत्सत्रमभिधीयते । इति ॥१॥ सुखासीनानिति कर्मच्छिद्रेषु सुखं स्वरूपानन्दं विचारयितुमासीनान् अभ्यगच्छत आभिमुख्येन स्वयमेव तेषां पुरः कथां वक्तुं कौतूहलितयागतवान् । नानाह्वतोध्वरं गच्छेदन्यत्र तु कुतूहलादित्युक्तेः संशितव्रतान्सम्यक् शितं तीक्ष्णं खड्गधारा वदनास्कंदनीयं व्रतं ब्रह्मचर्यादिकं येषां तान् ।२। नैमिषारण्यवासिनामाश्रममनुप्राप्तं तं तपस्विनः परिवव्रुरिति संबन्धः। अनुप्राप्त इति पाठे।तूत्तरार्धे तामित्यध्याहार्यम् ॥३॥ तपोधनानां तपोवृद्धिरेव प्रष्टव्यातस्तांस्तपोवृद्धिमपृच्छत्पृच्छेर्द्विकर्मकत्वात् तपोवृद्धानिति पाठे तपोपृच्छदित्यन्वयः ॥४॥ निर्दिष्टमिहोपविश्यतामिति दर्शितम् ॥ ५ ॥ प्रस्तावयन्नुपोद्घातयन् प्राप्तवया इति पाठे वृद्ध इत्यर्थः ॥६॥ उपोद्घातमेवाह कुत इति विहृतः नीतः ॥७॥ एवमिति सम्यक्शब्दतः शुद्धं यथावदर्थतः शुद्धं वचनसंपन्नः शब्दप्रयोगकौशलयुक्तः तेषां चरिताश्रयं तेषां मुनीनां चादन्येषां राजादीनां च संबंधीनि यानि चरितानि तेषामाश्रयभूतं वचनम् ॥ ८ ॥ भावितात्मनां विशोधितचित्तानाम् । सौतिरुवाच जनमेजयस्य राजर्षेरित्यक्षराधिक्यमार्षम् यत्तु जन्मनैवातिशुद्धेन शत्रूनेजितवान् यतः एजृकंपनेधातुर्हि जन्मेजय इति श्रुत इति निरुच्य चतुरक्षरं नामेत्याहुस्तन्निर्मूलं जनमेजयः पारिक्षित इति श्रौताक्षरसंख्याविरोधात्। जन्मशब्दस्यानुपसर्गत्वाच्चैकिपररूपं दुर्लभं च। युक्तं तु जनशब्दपूर्वादेजृभ्रेजृभ्राजृदीप्ताविति-दीप्त्यर्थाण्ण्यंतादेजेः खशितिखशिमुमागमे जनमेजय इति।९।

समीपे पार्थिवेन्द्रस्य सम्यक्पारिक्षितस्य च ।
कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाःकथाः ॥ १०
कथिताश्चापि विधिवद्या वैशंपायनेन वै ।
श्रुत्वाऽहं ता विचित्रार्था महाभारतसंश्रिताः ॥ ११
बहूनि संपरिक्रम्य तीर्थान्यायतनानि च ।
समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितम् ॥ १२
गतवानस्मि तं देशं युद्धं यत्राभवत्पुरा ।
कुरूणां पाण्डवानां च सर्वेषां च महीक्षिताम् ॥ १३
दिदृक्षुरागतस्तस्मात्समीपं भवतामिह ।
आयुष्मन्तः सर्व एव ब्रह्मभूता हि मे मताः ।
अस्मिन्यज्ञे महाभागाः सूर्यपावकवर्चसः ॥ १४
कृताभिषेकाःशुचयःकृतजप्याहुताग्नयः ।
भवन्त आसने स्वस्था ब्रवीमि किमहं द्विजाः॥ १५
पुराणसंहिताः पुण्याः कथा धर्मार्थसंश्रिताः ।
इतिवृत्तं नरेन्द्राणामृषीणां च महात्मनाम् ॥ १६

ऋषय ऊचुः ।

द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा ।
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् ॥ १७
तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ १८
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम् ।
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम् ॥ १९
जनमेजयस्य यां राज्ञो वैशंपायन उक्तवान् ।
यथावत्स ऋषिस्तुष्ट्या सत्रे द्वैपायनाज्ञया ॥ २०
वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुतकर्मणः ।
संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम् ॥ २१

सौतिरुवाच ।

आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ २२

पार्थिवेन्द्रस्य समीपे कृष्णद्वैपायनप्रोक्ताः वैशंपायनेन कथिताश्चेति संबन्धः ॥१०॥ विशं प्रजां पातीति विशंपो जनमेजयस्तस्यायनं गुरुत्वेनाश्रयभूतो विशंपायनः स एव वैशंपायनः स्वार्थे तद्धितः । यद्वाविरिवाविर्जीवः पक्षिवद्देहान्तसंक्रमणात् । शंपः सुखस्य पालक ईशः तयोरयनमधिष्ठानं शुद्धं ब्रह्म तदधीते तद्वेदेति वा वैशंपायनस्तेन वैशंपायनेन । ताः श्रुत्वा तं देशं गतवानस्मीति संबन्धः महाभारतं 'चत्वार एकतो वेदा महाभारतमेकतः । महर्षिभिः समागत्य तुलामारोपितं पुरा॥ महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।' इत्युक्तलक्षणं तत्र संश्रिताः सम्यकृश्रिताः सर्ववेदार्थगर्भा इत्यर्थः । तप्पर्वमरुद्भ्यामित्यन्यत्रस्मृतो मत्वर्थीयस्तप्प्रत्ययोबाहुलकाद्भारशब्दादपीति ज्ञेयम् ॥ ११ ॥ तीर्थानि जलप्राधान्यात्पुष्करादीनि आयतनानि स्थलप्राधान्यान्नैमिषादीनि ॥१२॥१३॥१४॥ कृतेति आसने स्वस्थाभवन्तो भवंत्विति शेषः । आसते इति पाठे स्वास्थ्यं पृच्छति । कथां प्रस्तोतुमित्यर्थः । अहं च पुराणादिष्वन्यतमं किं ब्रवीमीत्याज्ञापयतेति शेषः॥ १५ ॥ पुराणेति 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चेति पुराणं पञ्च लक्षणम् ' इति ॥ स्मृत्युक्तं पुराणं पुरापि नवं वर्णपदानुपूर्वीविभ्रंशेऽपि प्रतिकल्पं तदर्थानां सर्गादीनां समाननाम रूपत्वात् सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयदिति श्रुतेः पुराणस्य संहिताः धर्माश्रिताः कथाः दानमोक्षधर्माद्याः अर्थाश्रिताः राजधर्माद्याः नरेन्द्राणां नलरामादीनां इतिवृत्तं आचारप्रकारं ऋषीणां भृग्वादीनां चात्पतिव्रतादीनाम् ॥१६॥ सुरैः ब्रह्मर्षिभिश्च यदभिपूजितं स्वस्वलोके इति शेषः ॥ १७ ॥ विचित्राणि स्वरूपतोऽर्थतश्च रम्याणि पदानि वाक्यादेरुपलक्षणं पर्वाणि पौष्यपौलोमादीनि आदिसभादीनि वा यत्र तस्य सूक्ष्मा अतर्क्या अर्था आत्मतत्त्वादयः 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । नाप्रतिष्ठितं तर्केण गंभीरार्थस्य निश्चयः ॥' नैषां तर्केण मतिरापनेयेति स्मृतिभ्यां न्यायस्तत्प्रतीत्यनुकूलायुक्तिः वेदार्थैः वेदतात्पर्यविषयभूतैरर्थैश्च भूषितस्य ॥१८॥ संस्कारोपगतां पदादिव्युत्पतिमतीं ब्राह्मीं वाचं ब्राह्मीं गौर्भारतीभाषेत्यमरः। नानाशास्त्रैरुपबृंहितां उद्दीपितां शास्त्रान्तराविरुद्धामित्यर्थः ॥ १९ ॥ राज्ञोग्रे इति शेषः ॥ २० ॥ वेदैश्चतुर्भिः संयुक्तां चतुर्वेदार्थवतीं समितामिति पाठे तुल्यामित्यर्थः । पुण्यां श्रेयोवर्धिनीं पापभयापहां चित्तशोधिकाम् ॥२१॥ मङ्गलाचरणपूर्वकं मुनिभिः प्रार्थितमर्थं वक्तुं प्रतिजानीते आद्यमित्यादिचतुर्भिः हरिं नमस्कृत्य महर्षेर्मतं प्रवक्ष्यामीति तृतीयचतुर्थयोरन्वयः । अत्र भूबीजाङ्कुरतरुफलोपमाः पञ्च ईश्वरपुरुषाः शुद्धशबलसूत्रविराड्विष्णुसंज्ञाः निरुपाधिमायोपाधिमायाकार्यापञ्चीकृतमहाभूतोपाधिपञ्चीकृतमहाभूतोपाधिपुरुषाकारमूर्त्युपाधिविशिष्टचैतन्यरूपाः तत्र त्रीनत्रोद्दिशति नमस्कार्यत्वेन आद्यं पुरुषं निरुपाधिचैतन्यं ईशानं मायिनं तु महेश्वरमिति श्रुतिप्रसिद्धं।पुरुहूतं यज्ञेषु पुरुभिर्बहुभिर्होतृभिर्हूतमाहूतं पुरुभिः सामगैः स्तुतमध्वर्युभिरिष्टं चेत्यपि द्रष्टव्यम् । तद्यदिदमाहुरमुं यजामुं यजेत्यतस्यैव सा विसृष्टिरिति हिरण्यगर्भाख्ये सूत्रे सर्वयष्टव्यदेवतात्मत्वश्रुतेः यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्तीति स्मृतेश्च पुरुहं पूरुभूयिष्ठमित्यमरः । एतदेव त्रयं व्युत्क्रमेण विशिनष्टि व्यक्ताव्यक्तं सनातनमिति । व्यक्तं सूत्रात्मा हविर्भोक्तृत्वफलप्रदातृत्वादियोगात् अव्यक्तं ईशानः सुप्तिप्रलययोः सर्वलयात्मत्वात् सनातनं अखण्डदण्डायमानं एतेन तस्मादव्यक्तमुत्पन्नमितिस्मृतेश्चे-

**असच्च सदसच्चैव यद्विश्वं सदसत्परम् । परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ २३ ॥**

तरयोरुत्पत्तिमत्त्वेन लयो दर्शित ऋतं यथाभूतं यथा स्फटिके स्वतःशुद्धे हिङ्गुलाश्रयत्वेन रक्तत्वं तत्रैव स्फटिकांशप्रमोषे पद्मरागत्वं तत्रैव चन्द्रिकायामिन्द्रनीलत्वं चाध्यस्यते । तथा चैतन्ये मायायोगादीशत्वं ईशेऽप्यविद्यायोगात् सूत्रत्वं सूत्रेऽपि अविद्यादार्ढ्याद्विराट्त्वं चाध्यस्यते । तत्र उत्तरोत्तरापेक्षया पूर्वपूर्वं ऋतं परमतत्त्वाद्यः पुरुष एव । एकमिति मायाद्युपाधिकृतभेदनिरासः । अक्षरं अशेः सरन् व्यापकं । तेन आकाशात् पृथिव्यादेरिव नास्मात् पृथगुपाधेरपि सत्त्वमस्तीति दर्शितं । अत एव ब्रह्मनिरवधिकबृहत्वाद्देशतः कालतो वस्तुतश्च परिच्छेदशून्यम् ॥ २२ ॥

चतुर्थं विराजमाह । असच्चेति । यत्सदसत्परं सदसद्भ्यां कार्यकारणाभ्यां सूत्रेशाभ्यां परमन्यत्सनातनाख्यं तदेव वस्तु विश्वं विराट्रूपमित्यर्थः।ब्रह्मैवेदं सर्वमित्यादिश्रुतेः।किं भूतं विश्व सत् दृश्यमानत्वात् । असच्च नेह नानास्ति किंचनेति तत्त्वज्ञानबाध्यत्वश्रुतेः नन्वाद्यंतयोरसन्मध्ये च सद्घटादिकं दृष्टं नेत्याह । असच्चेति रज्जूरगवत्प्रतिभासमानमपि कालत्रयेऽपि नास्तीत्यर्थः । फलोपमं पञ्चमं विष्णुमाह परेति परे सूत्रात्मानोऽवरे विराडादि घटान्ताः । बहुत्वमनन्तशक्तित्वसूचनार्थं तेषां स्रष्टारम् । नन्वण्डान्तरुत्पन्नस्य कथं परादिस्रष्टृत्वमत आह । पुराणमिति पुरापि नवम् । अनादिरेवसन्ब्रह्माण्डान्तश्चतुर्भुजेन रूपेणाविर्भूतोनन्तशक्तिः परिणतबीजगर्भं फलमङ्कुरादीनामिव परावराणां स्रष्टा भवतीत्यर्थः । अत एव परमव्ययमत्यन्तं व्ययशून्यं संसारस्यानन्त्यात्तत्कारणीभूतस्य तस्य व्ययो युज्यत इत्यर्थः । ननु सोयमात्मा चतुष्पादित्यादिना निरुपाधितुर्यप्रतिपत्तये परमात्मनस्त्रीण्येव सोपाधिका निरूपाणि विश्वतैजसप्राज्ञसंज्ञानि माण्डूक्यादिषु श्रूयन्ते न तु चतुर्थमिति चेत्सत्यम् । तथापि । य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश अरश्चण्यश्चार्णवौ तृतीयस्यामितो दिवीत्यादि प्रभुमितं हिरण्मयं वेश्मेतिच्छांदोग्ये पुरुषाकृतेर्ब्रह्मणस्तल्लोकादेश्च श्रवणात् । कौषीतकिब्राह्मणे च पर्यङ्कस्थस्य ब्रह्मणस्तेन सह संवादादेश्च श्रवणात्तदप्यस्तीति गम्यते । आरण्यकेऽपि गन्धमादनप्रवेशे धौम्यवाक्ये महामेरुर्महाभागेत्यादिना मेरुपृष्ठे ब्रह्मलोकादन्यं विष्णुलोकं प्राच्यां नारायणस्थानं मेरावतिविराजते इत्यादिना स्थानमेतन्महाभागध्रुवमक्षयमव्ययमित्यन्तेन ग्रन्थेनोक्तविशेषणमामनन्ति । तत्रैव च तत्प्राप्तानामनावृत्तिः स्मृता तत्र गत्वा पुनर्नेमं लोकमायान्ति भारतेति ।स्थानान्तरेभ्यश्चावृत्तिगीतासूक्ता । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेति । इमावेव ब्रह्मविष्णुलोकावभिप्रेत्य चिन्तितं चतुर्थे कार्यंवादरिरित्यत्र छान्दोग्ये हि अर्चिरादिमार्गं प्रकृत्य श्रूयते स एतान्ब्रह्म गमयतीत्यत्र मानवः पुरुषः उपासकान्कार्यं ब्रह्म प्रापयत्युत विष्ण्वाख्यं परामिति । प्राणो ब्रह्मकं ब्रह्मखं ब्रह्मेति प्रकृत्य यद्वाचकं तदेव खं यदेव खं तदेव कमिति कखयोरभेदमुक्त्वा प्राणं च हास्मै तदाकाशंचोचुरिति प्राणाकाशाख्ययोः कार्यकारणब्रह्मणोरुपास्यत्वेनोपसंहारात्संशयः । तत्र परस्मिन्ब्रह्मणि न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त इति श्रुतिप्रसिद्धं पारमार्थिकं गत्यभावमभिप्रेत्य कार्यं ब्रह्मैव गतिं प्राप्यमिति पूर्वः पक्षः । दृश्यते परामिति सिद्धान्तः । अस्मिन्पक्षे श्रुतिसूत्रयोः स्वारस्यं कतकेव गंतव्यं ईक्षाति । कर्माधिकरणे भाष्येऽपि हि एवंविधौ पूर्वोत्तरपक्षौ सर्वत्र दृश्येते । यतूक्तं परमेश्वरे हिरण्यश्मश्रुत्वादिरूपश्रवणं नोपपद्यते इति तत्र ब्रूमः स्यात्परमेश्वरस्यापीच्छावशान्मामयं रूपं साधकानुग्रहार्थं मित्यादिना तद्वदिहापि । ज्ञये तत्र पूर्वपक्षे फलं इमं मानवमावर्तं नावर्तन्त इत्यन्ते इमामिति विशेषणान्मानवान्तरे आवृत्तिरिति सिद्धान्ते तु न च पुनरावर्तन्त इति श्रुत्यन्तरात् । यतो वा इमानि भूतानि जायन्त इतिवादिदं शब्द उपप्रदर्शनार्थ इत्यनावृत्तिरिति । कथं तर्हि भाष्ये सूत्रकममुल्लङ्घ्य परं गतिप्राप्यमिति।प्रापय्य कार्यमेवं गतिप्राप्यमिति सिद्धान्तितं शृणु नोव्योमापरो यदिति परव्योमाख्यस्याव्याकृताकाशस्य सर्वं जगत्कारणस्यापि सृष्टेः प्राङ्निषेधश्रवणात् तस्मादव्यक्तमुत्पन्नमिति । तदुत्पत्तिश्रुतेर्हिरण्यश्मश्रुत्वादिमतोऽपि कारणब्रह्मणः शुद्धापेक्षया कार्यत्वं विवक्षित्वा तद्विषयत्वं गतिश्रुतीनां वर्णितं परशब्देन च शुद्धं विवक्षित्वा तत्र गत्ययोगश्च दर्शित इति । न च हिरण्यश्मश्रुत्वादिश्रवणं कार्यब्रह्मविषयमेवेति वाच्यम् । अन्तस्तद्धर्मोपदेशात् दहरउत्तरेभ्यइत्यादिन्यायैस्तस्य जगत्कारणत्वसिद्धेः इयमेवर्गग्निः सामवागेवर्क्प्राणः सामेत्यादिना ऋक्सामात्मकत्वेन निरूपितस्य कृत्स्नास्याधिदैविकाध्यात्मिकप्रपञ्चस्य तस्यर्क्चसामचगेष्णाविति तदङ्गुलिपर्वमात्रत्वोक्तेश्च तस्मात् शास्त्रान्त्यन्यायेन यदधीनं जगद्व्यापारवर्जं इतरेषामुपासनासिद्धानां हिरण्यगर्भादीनामैश्वर्यं येन सह तेषां भोगसाम्यं यथैतान्देवतासर्वाणि भूतान्यवन्त्येवंहैवंविदं सर्वाणि भूतान्यवन्तीति लिङ्गाद्गम्यते । यस्य स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलमिति घटादिभ्यो मृद इव इन्द्रजालादैन्द्रजालिकस्येव च विकारवर्ति तदवर्ति च रूपं स्थितिश्च श्रूयते । यल्लोकं प्राप्तानामनावृत्तिस्तद्भृत्यभूतचतुर्वक्त्रेण सहमुक्तिराधिकारिणामभुक्तविद्याफलानां तल्लोकगतानामपि यावदधिकारं कल्पान्तरेऽप्यवस्थितिश्चेति श्रूयते ।तस्य विग्रहादिकं सर्वं शास्त्राप्रामाण्यदभ्युपेयम् । अयमेव भगवत्पादीये वेदान्तसारे वनवृक्षदृष्टान्तेन स्थूलसूक्ष्मकारणोपाधिभेदेन त्रिविधेसमष्टिव्यष्टीप्रतिपाद्य समष्टिर्वनदृष्टान्तेन प्रतिपादितः । किं च

शुद्धे ब्रह्मणि प्रणिधीयमानं चित्तं स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि प्रविलापयेदिति पञ्चीकरणोक्तक्रमेण स्वाभाविकपरिच्छेदाभिमानं त्यक्त्वाऽमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक इति शास्त्रीयसार्वात्म्याभिमानयुक्तं व्यक्तभावनामन्तरेण सहसा कर्तुमशक्यम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यत इत्युक्तेः। देहवद्भिर्देहाभिमानवद्भिः। तस्मात् भावनामयं प्रणिधानमयं चेति द्विविधमपि ध्यानं शुद्धं वस्तुप्रेप्सोरावश्यकम्। तत्राद्यं नष्टवनितावदसन्निहितविषयं पुरुषव्यापारतन्त्रम्। तेन वशीकृतं चित्तं क्रमशो मूर्त्याकारतः प्रच्याव्याव्यक्तमात्रालम्बनो भूत्वा विराडादौ कारणे ब्रह्मणि चित्तं प्रणिदध्यात्। अयमेव ध्यानक्रमः श्रीमद्भागवतादिसर्वपुराणेषूक्तः। प्रणिधानं च वस्तुतत्त्वविषयं पूर्वोक्तस्फदिकदृष्टान्तेन आत्मन्यध्यस्तस्य विराडादित्रयस्य रज्जुसर्पस्येव चित्तस्थिरीकरणेन अधिष्ठानभूतशुद्धवस्तुदर्शनेन प्रविलापनकरणम्। तच्च दर्शनं दग्धेन्धनानलवत्स्वयमुपशान्तचेतस्सुषुप्तिसरूपाकाचिदानन्दावस्थाविर्भवति। सा च श्रूयते यथा निरिन्धनो वन्हिः स्वयोनावुपशाम्यति। एवं वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यतीति। तत्र माण्डूक्यादौ यद्यपि प्रणिधानगोचरेव रूपत्रयमुक्तं तथापि मन्दाधिकारिणां भावनागोचरमपि चतुर्थं सोपाधिकं ऐश्वरं रूपं श्रुत्युक्तं प्रत्याख्येयम्। नन्वस्य नित्यत्वे तल्लोकादिकमपि नित्यं वाच्यं तथा च सृष्टेः प्राक्सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयमिति त्रिविधभेदशून्यसन्मात्रसद्भावावधारणं विरुध्येतेति चेन्न। व्यवहारपरमार्थदृष्टिभ्यामुभयोपपत्तेः। तथा हि। "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा। अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा॥ अस्यार्थः। न रूपमस्य नान्तोस्य छित्त्वैनामिति चेश्वरः। इन्द्रजालोपमत्वेन भवाश्वत्थं न्यरूपयत्॥१॥ सम्यग्दृशा वीक्ष्यमाणं रूपं नास्योपलभ्यते। एतत्प्रयोक्तुर्नित्यत्वादयमाद्यन्तवर्जितः॥ २॥ रज्जुसर्पसमस्यास्य तुच्छाज्ञानोद्भवत्त्वतः। प्रतिष्ठाख्यं लयस्थानं नास्ति कुम्भस्य मृद्यथा॥३॥ अस्य द्वैतेन्द्रजालस्य यदुपादानकारणं। अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते॥ ४॥ इत्येवं वार्तिकाचार्यैरुपचारात्परात्मनः। उक्तोपादानता तस्मादप्रतिष्ठो भवद्रुमः॥५॥ दुःस्वप्न इव संसारः सङ्गमात्रेण दुःखदः। तमसङ्गासिनाच्छित्त्वा प्रयाहि परमं पदम्॥६॥ नित्यं बद्धदृशामिन्द्रजालं शुद्धदृशां त्विदम्। कालत्रयेऽपि नास्तीति न्यायमत्रापि योजयेत्॥७॥ प्रवाहनित्यं जगदित्याहुर्मीमांसकाः स्फुटम्। व्यवहारे भाट्टनयो ह्यस्माकपि संमतः॥८॥ न कार्यत्वादनित्योऽयं नन्दनन्दनविग्रहः। उपचाराद्धि कार्यत्वं तत्र पौराणिका जगुः॥ ९॥ देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा। उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते॥१०॥ दुर्गा विनायको विष्णुर्भवो भानुरितीह हि। नामरूपान्तराण्यस्य शृणुमः पार्थसारथेः॥ ११॥ वेदान्तेष्वपि नित्यत्वं खादीनां व्यावहारिकम्। सिद्धवत्कृत्यदृष्टान्ते कीर्त्यते हि परिस्फुटम्"॥१२॥ तथा ह्याकाशवत्सर्वगतश्च नित्यः इत्याकाशात्मनोर्दृष्टान्तदार्ष्टान्तिकयोः सर्वगतत्वानित्यत्वे संगच्छेते। अन्यथा द्वयोरपि सत्यत्वे सर्वगतत्त्वस्यैवासंभव इत्यास्तां तावत्। ततश्च यथाऽस्मदादिसुप्तिकाले स यदा स्वपिति तदैवं वाक्सर्वैर्नामाभिः सहाप्येतिचक्षुः सर्वैरूपैः सहाप्येतीत्यादिना श्रूयमाणेऽपि सर्वनामरूपप्रलये इतरेषां व्यवहारो न विच्छिद्यते। एवं ब्राह्मप्रलयकालेऽपि वैकुण्ठवासिनामिति। स देवसोम्येत्यादिकमपि आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेतिन्यायेन नेह नानास्ति किंचनेति श्रूयमाणस्य व्यवहारकालेऽपि प्रपञ्चासत्त्वस्य प्रदर्शनार्थं न तु कदाचित्कस्य तदसत्त्वस्य ज्ञापनार्थम्। 'नासतो विद्यते भाव' इत्यसदुत्पत्तिनिषेधात् 'नान्तो न चादिरिति' गीताविरोधाच्च। तस्मादखण्डदण्डायमानेन्द्रजालतुल्यस्य जगतो दर्शनादर्शने एवादयलयावित्यभिप्रायेण सृष्टिश्रुतय इत्याकाशवद्व्यावहारिकं विष्णुमूर्त्यादेरपि नित्यत्वसिद्धम्। परमार्थतस्तु निर्विशेषचिन्मात्रादन्यकालत्रयेऽप्यस्तीतिदिक्। "रज्ज्वज्ञानात्सर्पभीतिपातक्षतमिव क्रमात्। आत्माज्ञानादहंसङ्गक्रियादेहं समुत्थितम्॥ १॥ घृतवल्लीयिते सुप्तौ वासनामात्रदेहकः। बोधे स हन्यते चैव पुनः पुनरहं भ्रमः॥२॥ अहं तद्वासनाधारा नाज्ञाने सति शाम्यति। सङ्गक्रियादेहचर्कं नानष्टेहं विनश्यति॥ ३॥ रज्जुज्ञानाद्भयं नश्येन्न तु पातोद्भवं क्षतम्। आत्मज्ञानात्तथासङ्गो न तु कर्मोद्भवं वपुः॥४॥ यावत्कर्म वपुस्तावद्यावद्देहश्च तिष्ठति। तावत्कर्माहं भ्रमश्च वर्तेते दग्धवस्त्रवत्॥ ५॥ तत्रैवं सति कर्मोत्थं कर्मनाशात्प्रणश्यति। अकर्मजं तु बोधेन बाध्यते न तु नश्यति॥६॥ एवं श्रीकृष्णदेहोऽयमकर्मोत्थो न नश्यति। बोधेन बाध्यते चैव स्वप्ने दृष्ट इवेश्वरः॥७॥ अन्योन्यबाधकौ जाग्रत्स्वप्नावात्मनि कल्पितौ। नोत्पद्येते न नश्येते रज्ज्वां सर्पस्रजाविव॥८॥ आत्मैव हीश्वरोऽस्माकं धीदर्पणपृथक्कृतः। धीनाश एवं तद्बाधः कार्यत्वाद्धीश्च नश्यति॥ ९॥ नन्वैश्वर्यमकार्यत्वान्न नश्येत्प्रत्यगात्मनः। बाढं बाधस्तु तस्य स्यान्मायाबाधेन सर्वथा॥ १०॥ अत्रोक्तं वार्तिकसारे—'ब्रह्मत्वादेव जीवस्य भ्रान्तजीवत्ववारणात्। वशित्वाद्या ब्रह्मधर्माः शिष्यन्तेऽतोऽयमीश्वरः॥११॥ निवृत्तत्वाजीवधर्मा भासन्ते नैव कस्यचित्। अनिवृत्ता ईशधर्मा अकर्मापादि तत्त्वतः॥१२॥ भान्ति तेत्वीश्वरस्यापि बुद्धानां च स्वबुद्धितः। ईश्वरस्य ततो धर्माः सन्तु न त्विह विस्मयः॥१३॥ तिष्ठन्त्वपीशधर्मेषु धर्माणां मायिकत्वतः। ईशो निर्धर्मको बोध्यो विमुक्त्यर्थं मुमुक्षुभिः" इति। प्रपञ्चस्तु तत्रैव द्रष्टव्यः। कस्यचित्विदेहमुक्तादेः

अयं च ईश्वरोऽयमधर्मवत्स्वस्वबुद्धिभेदाद्वर्णवद्गलिपिभेदादाकारभेदे विष्णुरिति सांब इति च शास्त्राद्गृह्यते । एवं तल्लोकोऽपि वैकुण्ठ इति कैलास इति च एकं संतं बहुधा कल्पयन्ति यो देवानां नामधा एक एवेत्यादिश्रुतिभ्यः । तं यथा यथोपासते तथेतः प्रेत्य भवन्तीति श्रुतेस्वद्भावनावतां तत्सारूप्यप्राप्तिः कीटभृङ्गन्यायेन भवति न तु तदैक्यप्राप्तिरिति व्युत्पादितं वेदान्तकतके । केचित्तु पूर्वोक्तमनःप्रणिधानात्मकध्यानसंप्रदायानभिज्ञाः एतल्लोकप्राप्तिरेवमुक्तिरयमेवेश्वरो न समष्टयाख्योऽन्य ईश्वरोऽस्तीति वदन्ति । ते सर्वशास्त्रप्रसिद्धं मुक्तौ द्वैतादर्शनं बाधमानाः स्वाप्ययसंपत्त्योरित्यादिन्यायेन न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं पश्येदिति मुक्तिकैवल्ययोरविशेषादद्वैतादर्शनश्रवणेन च विरुध्यन्ते । अनयैक च श्रुत्या द्वितीयाभावादेव द्वैतादर्शनं न तु दृग्लोपादिति वदन्त्या द्वैतस्येन्द्रजालतुल्यत्वं दर्शितं'तेन विष्णुः सर्वोत्तमः शिवो जीवः । शिवः सर्वोत्तमो विष्णुर्जीव ' इत्युपासकानामाग्रहो विष्णवायुत्कर्षप्रतिपादकश्रीभागवतसुतसंहितादीनामनार्षत्वासुर — त्वादिवचनैर्दूषणं च शास्त्रमर्यादा नवबोधमूलमेव । विकल्पो विशिष्टफलत्वादिति न्यायेन ऐकात्म्ये चितावतारार्थं यस्यकस्यचिदप्याकारस्यालम्बनीयत्वात् । यत्तु शैववैष्णवपुराणेषु इतरनिन्दास्मरणं तन्न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति न्यायेन तिधेयस्तुत्यर्थं ' यथा उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मीन्संदधातीत्युपक्रम्य प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुव्हति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवाकीर्तयन्तः सूर्योज्योतिर्न तदा ज्योतिरेषामिति । आदित्यो वा अस्तं यन्नग्निमनुप्रविशतीति श्रुतिमुपजाव्य यदुदिते सूर्ये प्रातर्जुहुयात् । यथातिथये प्रद्रुताय शून्यायावसथायाहार्थं हरन्ति तादृगेव तदिति उदितानुदितहोमयोः प्रकरणे इतरनिंदाविधेयस्तुत्यर्थैव तद्वत् । न तु तत्र निन्दायां तात्पर्यमस्ति । उभयस्यापि त्याज्यत्वापतेः न हि विष्णुभजनं शिवभजनं वा तदङ्गमूर्ध्वपुण्ड्रत्रिपुण्ड्रादिवासुरापानादिवद्रागतः प्राप्तं येन टिंदार्थवादानुमितनिषेधशास्त्रबलादनर्थकरं स्यात् । यद्वा सत्यपि निषेधे शास्त्रतः प्राप्तत्वात् आतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति विहितप्रतिषिद्धत्वात्षोडशिग्रहणाग्रहणवत्त्विकल्प्यताम् । विशिष्टफलत्वेनाविरोधे वा समुच्चीयताम् । न तु तद्विधायकशास्त्राप्रामाण्यमध्यवसातुं शक्यम् । इतरस्यापि तथात्वापतेः सर्वपुराणोच्छेदप्रसंगः तस्मातस्यालशुनकन्यायेन शिवविष्णुगोचरे निन्दास्तुतिसंकेतभेदमाश्रित्य कार्यकारणब्रह्मगोचरतया व्याख्येये । यथाहि—कश्चित्कुतुकी मुग्धां भार्यां कोपयितुं गृहशुनकं स्यालनाम्नासंकेत्य गालयति । सा च मद्भ्रातरमङ्गंगालयतीति कुप्यति । तद्वच्छैवे विष्णुशब्देन कार्यं ब्रह्मविवक्षित्वात्तद्भजनात्भावनातारतम्येनैश्वर्यवतारतम्यवत्तया हीनसंपदां पुंसां दुःखकरत्वात् नरकशब्दोदितस्य ब्रह्मलोकस्य प्राप्तिरिष्यते । एवं पक्षान्तरेऽपि तथा च व्याख्यातं मोक्षधर्मेषु जापकोपाख्याने । अमूनि यानि स्थानानि देवानां परमात्मनामित्यादिना तस्य स्थानवरस्येह सर्वे निरयसंज्ञिता इत्यन्तेन । तमिमं पौराणं भाषाभेदमजानन्तः पामराः शैववैष्णवापसदा ' ब्रह्माणं केशवं रुद्रं भेदभावेन मोहिताः । पश्यन्त्येकं न जानन्ति पाखण्डोपहता जना ' इति तत्रैव स्मर्यमाणं शिवविष्णवोर्भेददर्शने दोषमुदाहृत्याभेदश्रुतीश्चापश्यन्तो मूलकारणमेवान्त्यात्कार्यान्नट इव तत्तद्रूपेण भासत इति शास्त्रतत्त्वमजानन्तोऽन्यतररूपपरिग्रहेणेतरं निन्दन्तः परस्परं कलहायमानाः स्वामिद्रोहान्नरकायैव सज्जन्त इत्यलं प्रसक्तानुप्रसक्तोक्त्या । तस्मादस्ति चतुर्भ्य आत्मनः पादेभ्योतिरिक्तो विष्ण्वाख्यः पञ्चमः पुरुषः सोऽयं प्रतिपाद्यते । परावराणां स्रष्टारमित्यादिना । नन्वयं नन्दनन्दनो यदि परावराणामुच्चनीचानां स्रष्टा तर्हि वैषम्यनैर्घृण्यभागी स्यात् न च ततत्प्राणिकर्मापेक्षो विषमानर्थांत्सृजतीति वाच्यम् । कर्मण एव मुख्यत्वेन तस्याकिंचित्करत्वात् । कर्मणश्च कृष्यादेः सर्वाङ्गोपसंहारवतो विनैश्वरानुग्रहं फलसाधनत्वदृष्टेः । तस्मादुपासनार्थत्वेन कल्पनामात्रं तद्विग्रहादिकमिति चेत्सत्यम् । देवताधिकरणन्यायेनोपासनायामद्वैते वा शास्त्रस्य परमतात्पर्यवत्त्वेऽपि तत्प्रतिपत्त्युपायतया श्रुतस्येश्वरस्य अवान्तरतात्पर्यविषयतयाङ्गविधीनामिव देवताविग्रहादिविधीनां प्रामाण्यं सिद्धम् । मानान्तराविरोधात् । न च वैषम्यादिदोषः । दाशतय्यां निरस्तत्वात् । तथा हि न सस्वोदक्षो वरुणध्रुतिः सासुरामन्युर्विभीदको अचितिः । अस्तिज्जायान्कनीयस उपारेस्वप्नश्च नेदनृतस्य प्रयोतेति मन्त्रे सः स्वोदक्षोनयेन महद्यशस्यं कर्म कृतं तत् स्वसामर्थ्यं न भवति किं तु हे वरुणापरमेश्वर सा तवैव धृतिः त्त्वदीयमेवाधिष्ठातृत्वं तवैव माहात्म्यं तदित्यर्थः । नन्वन्यसामर्थ्येनान्यः करोतीत्ययुक्तमिति चेत्तत्राह । सुरेति यथा सुरामद्यं मन्युः क्रोधः । विभीदको विभीतकस्तत्स्थः कलिः अचितिर्भूतावेशपित्ताद्युद्रेकजन्मा उन्मादः एते अशक्तमपि पुरुषं वशीकृत्य महाशक्तसाध्यमपि कदर्यं कर्म कारयन्ति । तद्वदीश्वरोऽपि सर्वस्मिन्यशस्ये कर्मणि जीवं प्रवर्तयतीत्यर्थः । अयं भावः न हि त्वदारेनिमिषश्चनेशे इति श्रुतेः । ईश्वरानुग्रहं विना निमिषोऽपि स्वयं चलितुं न ईष्ट इति सर्वापि सात्त्विकी राजसी तामसी वा प्रवृत्तिरीश्वरायत्तैव । तथापि यथा सर्वरसप्रकृतेर्मधुरैकस्वभावस्य जलस्य इक्षुरसातिशयेन माधुर्यमभिव्यक्तं । जम्बीरमरीचमरसयोस्तु स्वाभाविकं तदभिभूतं औपाधिकमम्लत्वं कटुत्वं चाभिव्यक्तम् । एवं सर्वजगत्प्रकृतेः सत्त्वैकस्वभावस्येश्वरस्यं नन्दनन्दनविग्रहोतिशयेन सत्त्वमभिव्यक्तम् । अत एव तस्मिन्निरतिशयं धर्म-

**मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।**
**नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ २४**
**महर्षेः पूजितस्येह सर्वलोकैर्महात्मनः ।**
**प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥ २५**

**आचख्युः कवयः केचित्संप्रत्याचक्षते परे ।**
**आख्यास्यन्ति तथैवान्ये इतिहासमिमं भुवि ॥ २६**
**इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम् ।**
**विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः ॥ २७**

ज्ञानवैराग्यैश्वर्यादिकमस्ति । कामक्रोधादिभिमानिदेवताविग्रहे सत्त्वं तिरोभूतम् । औपाधिकं लोभवृत्त्याप्रादिकं प्रमादमोहादिकं चाविर्भूतं । तथा च यथा गोधूमादिचूर्णं इक्षुरसाद्यनुग्रहात्तद्रसवद्भवति । एवं जीवान्तःकरणमपि ईश्वरानुग्रहाद्धर्मोपगं कामानुग्रहाल्लाभोपगं च भवति । अत एव भगवद्गीतासूक्तम् । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति ॥ सर्वभूतान्तर्यामिणं प्रकृत्य । 'तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं मत्संस्थामधिगच्छसि' इति । तदनुग्रहफलं शान्त्यादिकमित्युक्तं । तथा । 'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः' इति । प्रश्नस्य उत्तरम् । 'काम एष क्रोध एष' इत्यादिना कामक्रोधलोभा एव पुरुषं पापे प्रवर्तयन्ति । नत्वीश्वर इत्युक्तम् । एष ह्येवासाधु कर्म कारयति । ईश्वरप्रेरितो गच्छेच्छ्वभ्रं वा स्वर्गमेवेत्यादिश्रुतिस्मृतिजातं तु पर्जन्यवदीश्वरस्यासाधारणकारणत्वमित्याह । न च तावता जलवत्सर्वान्तर्यामिणोपीश्वरस्य वैषम्यादिगन्धोऽस्ति । कल्पादयश्चाचारव्यभिचार एवाभिभवन्तीति परंपरया कर्मापेक्षत्वमपीश्वरस्य युज्यते । अङ्कुरादि जननस्य कार्यत्वेनाकर्तृकत्वानुपपत्तेश्च तत्कर्ता ईश्वरः सिद्ध एवास्ति । क्व तर्ह्यसावित्यत आह । अस्ति ज्यायाकनीयस उपार इति । उभावप्येकत्वादनुपाधिना रूपेण ज्येष्ठौ सोपाधिना कनिष्ठौ तथाप्युपाधिशुद्ध्यशुद्ध्यतिशयादीश्वरो ज्यायान् जीवः कनीयान् तस्य संघाताभिमानिन उपरि समीपे अन्तर्यामितयास्ति । अन्तः प्रविष्टः शास्ता जनानां सर्वात्मेत्यादिश्रुत्यंतरप्रसिद्धेः । केन लिङ्गेन तर्ह्यसौ ज्ञेय इत्यत आह । स्वप्नश्च नेदनृतस्य प्रयोतेति । स्वप्नश्च न स्वप्न इव इत एव । अनृतस्य मिथ्याभूतस्यैव अहंकारादिघटान्तस्य प्रपञ्चस्य प्रयोता युमिश्रणामिश्रणयोः प्रकर्षेण भूयो भूयः संयोजयिता वियोजयिता च । यो दृष्टिसमयां सृष्टिमिन्द्रजालवदाविर्भावयति। तिरोभावयति स भगवान् महामायावी समस्तपापसंछेदनकामैराराधनीय इति भावः । नन्वमूर्तस्यान्तर्यामिणस्तस्य कथमाराधनं कर्तव्यमित्यत आह । अरंदासोनमीह्ळुषे कराण्यहं देवाय भूर्णये नागाः । अचेतयदचित्तो देवो अर्योगृत्संरायेकवितरोजुनातीति न शब्द इवार्थः । अहं मीह्ळुषे भूयसीं धनस्य वृष्टिं कृतवते स्वामिने दासो न दास इव देवाय षड्भुजमूर्तये अरंकराणि अलंकरवाणि प्रार्थनायां लोट् । यथा दासाः स्वामिनं स्रक्चंदनमुकुटादिनालंकुर्वंति एवमहं पार्थिवं नन्दनन्दनविग्रहं भूषयेयमित्यर्थः । अनागाः निषिद्धाचरणवर्जितः । ननु चेतनो ह्यलंक्रियमाणः सद्यः फलं ददाति किमचेतनायालंकरणेनेत्यत आह । भूर्णये भूरियनुष्यराजाद्यपेक्षया अधिकं द्रव्यादिकं नयति भक्ताय प्रापयति भूर्णिस्तस्मै भूर्णये अचेतनोऽप्ययं सर्वान् कामान्दास्यतीति भावः । ननु दृष्टविरुद्धमेतत् । न हि प्रतिमाराधनेन धनं प्रतिमातः प्राप्यत इत्यत आह । अचेतयदिति । अर्यः भुक्तिमुक्तिकामैरभिगम्यः स्वामी देवः प्रतिमादिरूपः । अचितः चेतनारहितान् सर्वान् पिण्डान् अचेतयत् चेतनायुक्तान् करोति । अहल्यावत् भूतनिर्देशश्छांदसः । अयं भावः । देह इव प्रतिमायापि तीव्रभावनावता चैतन्यं स्पष्टमुपलभ्यते । प्रसिद्धं चैतत्प्रतिमोन्मेषणं मन्त्रशास्त्रे । उपाख्यायते च पुराणादौ । तस्मात्प्रतिमायाश्चेतनाधिष्ठितत्वेन चेतनस्य च सर्वपुरुषप्रवर्तकत्वे ततः फलसंभावनास्तीति । एवं परमेश्वरे श्रीमाधवादिप्रतिमारूपे सर्वपुरुषार्थप्रदे सत्यपि कवितरो बुद्धियूतरो जनो गृत्संप्राणंप्राणौ वै गृत्स इति श्रुतेः प्राणवन्तं जावं राजादिं राये धनार्थं जुनाति अनुसरति नानाविधैः काव्यैः क्षुद्र प्रभुं प्रस्तौति अहो दौर्भाग्यमस्येति श्रुतिरुरस्ताडं मंदानाक्रोशति । कवितमस्तु परमेश्वरमेव नन्दनन्दनापरपर्यायं समस्तपुरुषार्थकामः शरणीकुर्यादिति भावः । तस्माद्युक्तमुक्तं परावराणां स्रष्टारमिति ॥ २३ ॥ मङ्गल्यं मङ्गलावहं मङ्गलं स्वरूपेणैव । एष ह्येवानन्दयातीति आनन्दो ब्रह्मेति च श्रुतिभ्याम् । विष्णुं यज्ञात्मानं यज्ञो वै विष्णुरिति श्रुतेः । वरेण्यं वरणीयम् । भोगमोक्षकांक्षिभिरवश्यमादरणीयं अनघं आगन्तुकदोषास्पर्शिनम् । शुचिं स्वभावशुद्धं । शिवमिति पाठे शिवमद्वैतं चतुर्थं मन्यन्त इति श्रुतिप्रसिद्धं निर्गुणं । हृषीकेशं हृषीकानामिन्द्रियाणामीशितारम् । चराचरगुरुं चराचराणां गुरुं विद्याप्रदं अत एव हरिं संसार हरणं ॥ २४ ॥ ईदृशं हरिं नमस्कृत्य व्यासस्य मतं अथातो ब्रह्मजिज्ञासेत्यादिसूत्रैर्निर्णीतं यद्ब्रह्माद्वैतं तत्प्रकर्षेण नानोपाख्यानोपबृंहणेन वक्ष्यामि । तत्र श्रद्धोत्पादनार्थं महर्षेरित्यादि व्यासविशेषणं । ऋषीणां मन्त्रद्रष्टॄणां महत इति तन्मतस्य श्रौतत्वमुक्तं । अद्भुतकर्मण इति ब्रह्माद्वैतप्रतिपत्त्युपायभूतेन नानाव्याख्यानदृष्टान्तप्रणयेन न विचित्रग्रन्थकारित्वमुक्तम् ॥ २५ ॥ आचख्युरिति कवयः क्रान्तदर्शिनः ॥ २६ ॥ त्रैकालिकानामपि कवीनामेतदाख्याने गुणमाह । इदमिति । ज्ञानं ज्ञानसाधनं त्रयीरूपं द्विजातिभिस्त्रैवर्णिकैर्यद्धार्यते तादिदं इति-

अलङ्कृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः ।
छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियम् ॥ २८
निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसावृते ।
बृहदण्डमभूदेकं प्रजानां बीजमव्ययम् ॥ २९
युगस्यादौ निमित्तं तन्महद्दिव्यं प्रचक्षते ।
यस्मिन्संश्रूयते सत्यं ज्योतिर्ब्रह्म सनातनम् ॥ ३०
अद्भुतं चाप्यचिन्त्यं च सर्वत्र समतां गतम् ।
अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकम् ॥ ३१
यस्मात्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ॥ ३२
प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्त वै ।
ततः प्रजानां पतयः प्राभवन्नेकविंशतिः ॥ ३३
पुरुषश्चाप्रमेयात्मा यं सर्वऋषयो विदुः ।
विश्वेदेवास्तथादित्या वसवोथाश्विनावपि ॥ ३४

यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा
ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः ॥ ३५
राजर्षयश्च बहवः सर्वैः समुदिता गुणैः ।
आपो द्यौः पृथिवी वायुरन्तरिक्षं दिशस्तथा ॥३६
संवत्सरर्तवो मासाः पक्षाहोरात्रयः क्रमात् ।
यच्चान्यदपि तत्सर्वं संभूतं लोकसाक्षिकम् ॥ ३७
यदिदं दृश्यते किंचिद्भूतं स्थावरजंगमम् ।
पुनः संक्षिप्यते सर्वं जगत्प्राप्ते युगक्षये ॥ ३८
यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥३९
एवमेतदनाद्यन्तं भूतसंहारकारकम् ।
अनादिनिधनं लोके चक्रं संपरिवर्तते ॥ ४०
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ।
त्रयस्त्रिंशच्च देवानां सृष्टिः संक्षेपलक्षणा ॥ ४१

ह्रासरूपेण त्रिषु लोकेषु जातित उत्तममध्यमाधमजनेषु प्रतिष्ठितं ज्ञानकरत्वेनेत्यर्थः॥२७॥ समयैः संकेतैः 'समयाः शपथाचारकालसिद्धान्तसंविद' इत्यमरः दिव्यमानुषैः वैदिकलौकिकैः। संस्कृतप्राकृतैर्वा तथाह्यमृतमन्थनादौ जलादिषु घृतादिपदप्रयोगे वेदनिघंटु प्रसिद्धो दृश्यते। तथा जतुगृहदाहेपार्श्वचरादिषु वक्षघ्नादिशब्दा म्लेच्छप्रसिद्धा दृश्यन्ते।छंदोवृत्तैः त्रिष्टुबादिच्छंदोन्तर्गतैरिन्द्रवज्रादिभिर्वृत्तैः ॥२८॥ निष्प्रभे इति। यत्प्रजानां बीजं जगदुपादानं एकं निमित्तान्तरानपेक्षं ।अव्ययं अपरिणामिकूटस्थं वस्तु तत् बृहदण्डं ब्रह्माण्डरूपअभूत्। तदात्मान॰ स्वयमकुरुत। सच्चत्यच्चाभवदित्यादिश्रुतिभ्यो ब्रह्मण एव सर्वभावावगमात् । कदाण्डमभूदित्याकांक्षायां अस्मिन् प्रजानां बीजे निष्प्रभे प्रकर्षेण भानं विशेषविज्ञानं रूपाद्याकारं तद्रहिते सति। प्रलयकाले बुद्धिबोद्धव्ययोरभावात्। निरालोके आलोक्यतेऽनेनेत्यालोकः सत्वं ईश्वरोपाधिभूतं विक्षेपशक्तिमन्मायाख्यं तद्रहिते मायाया अप्यभावे कुतोऽण्डोत्पत्तिरत आह। सर्वतस्तमसावृत इति। मायाया आवरणशक्तिरूपात्तुच्छात्तमस एव स्वप्नप्रपञ्चवदण्डमुत्पन्नमित्यर्थः। तथा च श्रुतिः। नो व्योमापरोयदिति। सृष्टेः प्रागव्याकृताख्यमायाया अपि सत्वं निषिध्य तुच्छयेनाभ्वपिहितं यदासीत्। तमसस्तन्महिनाजायतैकमिति तमोमात्रात्सृष्टिं दर्शयति ॥ २९ ॥ युगस्य ब्रह्मकल्पस्यादौ जातं तत् निमित्तं चतुर्विधभूतग्रामोपादानम्। यस्मिन् अण्डेब्रह्म प्रविष्टमितिशेषः तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः।किं तत् सत्यंविकारत्वहीनम्। वाचारंभणं विकार इति विकारस्यानृतत्वश्रुतेः। किं जडप्रकृतिरूपं न ज्योतिःचिद्रूपं सनातनं सततैकरूपम् ॥ ३० ॥ अद्भुतं प्रत्यगात्मत्वेपिदुर्ज्ञेयत्वात्। आचिन्त्यं वाङ्मनसातीतत्वात्। सर्वत्रदेशे काले वस्तुनि च समतां साम्यं ऐक्यमिति यावत्। गतंप्राप्तम्। अव्यक्तं अव्याकृतम्। कारणं हेतुः सूक्ष्मंबाह्येन्द्रियाविषयत्वात्। सदसदात्मकं तुच्छातुच्छव्यावृत्तस्वरूपं अनिर्वचनीयमित्यर्थः॥३१॥ यस्मादण्डात् पितामहः स वै शरीरी प्रथमः। हिरण्यगर्भः समवर्तताग्र इत्यादिश्रुतिप्रसिद्धः। अस्य रजःसत्त्वतमोगुणप्रधानानि त्रीणि रूपाण्याह ब्रह्मा सुरगुरुर्विष्णुः स्थाणू रुद्रः ब्रह्मणो विभूतीःसृष्टिकर्मप्रधाना आह मनुरित्यादिना ॥ ३२ ॥ दक्षपुत्राः सप्त। 'क्रोधस्तमोदमश्चैव विक्रीतोथाङ्गिरास्तथा। कर्दमोश्वश्च सप्तैते दक्षपुत्राः प्रकीर्तिता' इत्यन्यत्रोक्ताः। एकविंशतिर्मरीच्यादयः सप्तमनवश्चतुर्दशेति। यथोक्तं ब्रह्माण्डपुराणे। 'ऋषयःसप्तपूर्वे ये मनवश्च चतुर्दश। एते प्रजानां पतय एभिः कल्पः समाप्यते' इति ॥ ३३ ॥ विष्णोर्विभूतिं पालनकर्मप्रधानाम॰न्यंतामाह। पुरुषश्चेति। यं मत्स्यकूर्ममरालादिविग्रहम् ॥ ३४ ॥ स्थाणोर्विभूतीः संहारकर्मप्रधाना आह। यक्षा इति। ततोब्रह्माण्डात्। ब्रह्मर्ष्याद्याः कृत्स्नसंसारसंहारकज्ञानप्रधानाः ॥ ३५ ॥ आप इत्यादिकंषट्कं वन्हिपुरुषयोरप्युपलक्षणम्।दिशः द्यौरित्येताभ्यां तदाभिमानिनौ चंन्द्रसूर्यौं गृह्येते। अन्तरिक्षं आकाशः एतच्च मूर्त्यष्टकं स्थाणोरेवाविभूतिः ॥३६॥ संवत्सरादिः कालोपिसंहारकत्वांत्स्थाणोरेव विभूतिः। यच्चादन्यपि दृष्टं श्रुतं वा तत्सर्वं तत एवाण्डात्संभूतमिति पूर्वेण सबन्धः ॥ ३७ ॥ यदिदं दृश्यते बाह्यं रूपादि आन्तरं च अहंकारतद्धर्मसुखदुःखादिसाक्षिदृश्यम् तत्सर्वं युगक्षये कल्पान्ते पुनः संक्षिप्यते। कूर्मांगवत्तिरोभवति स्वाधिष्ठाने ब्रह्मण्येव शुक्ताविव रजतम् ॥ ३८। प्रतिकल्पं सृष्टेः समाननामरूपत्वमाह। यथेति ॥ ३९ ॥ कल्पानामानन्त्यमाह। एवमिति। अनाद्यंतं परमात्मावगत्यवसानम् ॥ ४० ॥ एवं पिण्डब्रह्माण्डात्मिकां जडसृष्टिमुक्त्वा तदभिमानिचेतनसृष्टिमाह। त्रयस्त्रिंशदिति। शाकल्यब्राह्मणे त्रयश्च श्री च

×

**दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः । सविता स ऋचीकोऽर्को भानुराशावहो रविः ॥४२**

**पुत्रा विवस्वतः सर्वे मह्यस्तेषां तथावरः । देवभ्राट् तनयस्तस्य सुभ्राडिति ततः स्मृतः ॥४३**

शतात्रयश्च त्री च सहस्रेत्याद्युपक्रम्य महिमान एवैषामेते त्रयस्त्रिंशदेव देवा । इत्युक्तेस्त्रयस्त्रिंशदेवदेवाः तावंति शतानि सहस्राणि वा तेषामेव विभूतिरित्यर्थः । ते चाष्टौ वसव एकादशरुद्रा द्वादशादित्याः । इन्द्रः प्रजापतिश्च तत्र वसवः पृथिव्यग्नी अन्तरिक्षवायू आदित्यो दिवौ चन्द्रो नक्षत्राणि च रुद्रा एकादशेन्द्रियाणि आदित्याद्वादशमासाः इन्द्रः पर्जन्यः प्रजापतिर्यज्ञः एतेषामभिमानिनश्चेतना अत्र विवक्षिताः शरीरसृष्टेः प्रागुक्तत्वात् । सोयं सृष्टिसंक्षेपः । विस्तरस्त्वन्यत्रोक्तः । 'तिस्रः कोट्यस्तुरुद्राणामादित्यानां दश स्मृताः । अग्नीनां पुत्रपौत्रं तु संख्यातुं नैव शक्यते' इति ॥ ४१ ॥ कतम एकादेवतेति प्राण इति स ब्रह्मेत्युपसंहारे तत्रैवोक्तमेकं सूत्रात्मानं चेतनं विवक्षितत्वात्तद्विभूतयोऽन्ये चेतना इत्याह । दिवः पुत्र इत्यादिना सुविस्तरा इत्यन्तेन । दिवो नानारूपेण द्योतमानाया मायायाः पुत्र इव पुत्रो गर्भस्थत्वात् । मायायां चित्प्रतिबिम्बः सूत्रात्मेत्यर्थः । तस्यैवावयवाबृहद्भान्वादय एकादशसमनस्केन्द्रियाधिष्ठातृदेवताः । दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्र मित्रप्रजापतिबृहस्पतिसंज्ञा अपि अत्र सूर्यपर्यायैरेवाभिधीयन्ते। 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेस्तद्विभूतयोन्यादेवता इति स्मृतेश्च दिगादीनां सूर्यविभूतित्वात् । स बृहत् स भानुः स चक्षुरिति प्रत्येकं तच्छब्दः संबध्यते । अत्र बृहदादिपदार्थास्तु 'बृहद्व्योममयत्वेन श्रोत्रमिन्द्रियमुच्यते। द्रव्याणां भासनाद्भानुशब्देनोक्तं त्वगिन्द्रियम् ॥ १ ॥ चक्षुः प्रसिद्धमात्मा तु प्रेयस्त्वाद्रसनेन्द्रियम् । वागग्निदैवतत्वेन विभावसुपदोदिता ॥ २ ॥ कर्मणा प्रसवात्पाणीमतौ सवितृशब्दितौ । विशिष्टगतिमत्त्वादप्यर्कः पादेन्द्रियं मतम् ॥ ३ ॥ उपस्थः स्यादृचीकाख्य ऋचां सर्वाङ्गतेजसाम् । सङ्गमो रतिकालेत्रेत्येवमेवमरीचिकः ॥ ४ ॥ वायुराशावहःप्रोक्तो भासनादवनाच्च सः । भानूरविश्चोच्यते तौ घ्राणपायुपदोदितौ ' इति ॥ ५ ॥ ४२ ॥ पुत्राः प्रतिबिम्बाः विवस्वतः सूर्यवत्सर्वावभासकस्य चैतन्यस्य । यद्वा विशेषेण वस्ते आच्छादयति सर्वं ज्ञेयं व्याप्नोतीति विवोज्ञानं तद्वान् । आजानसिद्धज्ञानवान् ब्रह्मा । ' ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्' । इति स्मृतेः । तस्य पुत्र्यपि भार्याभूता द्यौः । प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवामित्यन्य आहुरिति श्रुतेस्तस्यामुत्पन्नाबृहद्भान्वादयम् इति ज्ञेयम् । पुरा विवस्वत इति पाठे विवस्वतः संबन्धी दिवः पुत्र इति योज्यम् महानेव मह्यः मनुः स्वार्थेड्यत्¹ तेषां मध्ये वरः श्रेष्ठः बुद्धितत्त्वाभिमानीत्यर्थः तस्य तनयो देवभ्राट् देवैरिन्द्रियैर्भ्राज्यते दीप्यते इति अहंकारो देवभ्राट् । अहमिदं पश्यामि अहमिदं शृणोमीत्याद्यनुभवात् । तस्य पुत्रः सुभ्राट् भौतिकं मनः तद्धि संकल्पविकल्पात्मकं सत्सर्वविषयप्रकल्पकं तत्तद्विषयरूपेण सुतरां स्पष्टं भ्राजते इति सुभ्राट्पदवाच्यं यथोक्तमक्षपादैः रूपादयोविषयाः संकल्पकृता इति । रत्नगर्भस्तु तत्र सृज्यं संहार्ययोरतिबाहुल्यं वक्तुंतन्मध्ये संक्षेपतोदेवानां सृष्टिमाह । त्रयस्त्रिंशदिति । त्रयस्त्रिंशद्यानितान्येवशतानि बिन्दुत्रययुक्तानि पुनस्तान्येव त्रयस्त्रिंशत्सहस्राणि च बिन्दुचतुष्टययुतानि तदा त्रयस्त्रिंशत्कोटय इत्यर्थः । देवानां सृष्टिः सृज्यमाना देवाः कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायात् । यद्वा त्रयस्त्रिंशाधिकशतत्रययुक्तषट्त्रिंशत्सहस्राणि देवानां संक्षेपतः तत्र तावद्ब्रह्मणो जन्मसमनन्तरमेव प्रथमकल्पे सृष्टिक्रममाह । दिवः पुत्र इत्यादिना । अत एव एतत्कल्पीय सूर्यवंशसृष्टिक्रमविरोधो नाशङ्कनीयः । दिवः पुत्र इत्येकं नाम दिवः पुत्रादयो द्वादशविवस्वन्तः सूर्या जाताः । नकारलोपश्छांदसः । तेषां सह्योऽवरःकनिष्ठः । मह्य इति च पाठः । तस्य पृथक् निर्देशो वंशकरत्वात् । तेभ्यः सह्यवंश्येभ्य एवायमेतत्कल्पीय कुरुवंशादिसद्वंशास्तस्मिन्कल्पेप्येषां वंशानां संभवात् । अत एव यदुभरतययातिवंशानां पृथगुपादानम् । यद्वा तेभ्य एवेदानीमिहोत्पन्नेभ्यः कुरुवंशादय इत्यर्थः । विमलबोधव्याख्यात्रदिवः पुत्र इत्यारभ्य संभूता बहवो वंशा इत्यन्तेन । ननु द्वौ वंशौराज्ञामिहोक्तौ सूर्यवंशश्चन्द्रवंशश्च । तत्रादित्यवंशस्तावद्ब्रह्मणो मरीचिर्मरीचेः कश्यपः कश्यपाद्विवस्वान्विवस्वतो मनुर्मनोरिक्ष्वाकुरिक्ष्वाकोर्विकुक्षिः स एव शशादस्ततः काकुत्स्थस्तस्मादनेनास्ततः पृथुः पृथोरार्द्रस्ततो बृहदश्वस्तस्माद्धुंधुमारादयो यावन्मरुत्त इति तावदादित्यवंशः । सोमवंशस्तावत् । ब्रह्मणोत्रिरत्रेः सोमः सोमाद्बुधस्ततः पुरूरवाः पुरूरवस आयुरायोर्नहुषस्ततोययातिर्ययातेः पुरुप्रभृतयो यावदेव वज्रपुत्र इति । एतौ द्वौ राजवंशौ ततः केऽमी दिवः पुत्रादयो राजानः । तथा पुराविवस्वतश्चेति न संगतम् । विवस्वतः पूर्वं कश्यपस्ततः पूर्वं ब्रह्मा ततश्च कथमुच्यते पुराविवस्वतश्चेति । तथा सुभ्राजश्चगायः पुत्रा दशज्योतिरादय इत्यपि न संगतम् ते हि दशज्योतिरादयः पार्थिवा उभयोरपि वंशयोः पुराणेतिहासादिषु न श्रूयन्ते। अत्रोच्यते।काचिदसंगतिर्नात्र। तत्र दिवः पुत्रस्तावदादित्य एव स्वरश्मिभिर्दिवः पूरणात् बृहद्भानुरपि स एव बृहंतो विश्वव्यापकाः भानवोऽस्येति । चक्षुर्विश्वप्रकाशकत्वात् आत्मा च स एव सहिब्रह्मज्योतिरित्यागमप्रामाण्यात् विभावसुश्च स एव ऋतुषु विविधप्रकारा रश्मयो यस्य । सविता च स एव ऋतुक्रमेण लोकोपकारार्थं सलिलगर्भप्रसवात् । मरीचिकः स एव । लोकोपकारार्थं मरीचीन्

१ बाहुलकात्

